## ॥ महाभारतं ॥

### महाभारत आदिपर्वः ॥

महा १। अध्यायः २०३॥

तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत्।
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः।
सृज्यतां प्रार्थवीयेह प्रसदेति महातपाः॥ १०

महा १। अध्यायः ५७॥

आत्मानामव्यं चैव प्रकृतिं प्रभवं परं।
पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरं॥ ८५॥

महा १। अध्यायः ६०॥

बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी।
प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह॥ २६
विश्वकर्मा महाभागो जज्ञे शिल्प प्रजापतिः।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः॥ २७
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः।
यो दिव्यानि विमानानि देवतानां चकार ह॥२८
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः।

पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययं ॥ २९

महाभारत सभापर्वः ॥

महा २ । अध्यायः ४९ ॥

सिक्त्तं निष्कसहस्रेण सुकृतं विश्वकर्मणा ।

तेनाभिषिक्त्तः कृष्णेन तत्र मे कश्मलोऽभवत् ॥ १५

महा २ । अध्यायः ११ ॥

मरुतो विश्वकर्मा च वसवश्चैच भारत ।

तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥ २२

महा २ । अध्यायः १ ॥

स कालं कंविदाश्वस्य विश्वकर्मा प्रचिन्त्य च ।

सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनां ॥ १६

महा २ । अध्यायः १ ॥

मय उवाच । अहं हि विश्वकर्मा वै दानवानां महाकविः ।

महाभारत आरण्यपर्वः ॥

महा ३ । अध्यायः ३ ॥

लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः । २४

महा ३ । अध्यायः १५८ ॥

शय्यासनवरं श्रीमत् प्यष्पकं विश्वकर्मणा ।

विहितं चित्रपर्यन्तमातिष्ठकं धनाधिपः ॥३५

महा ३ । अध्यायः २१८ ॥

विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।

आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ २५

महा ३ । अध्यायः २६७ ॥

अस्ति त्वत्र नलो नाम वानरः शिल्पि संमतः ।

त्वष्टुर्देवस्य तनयो बलवान् विश्वकर्मणः ॥ ४१

महा ३ । अध्यायः २९६ ॥

स गच्छन् कानने तस्मिन् हेमजाल परिष्कृतं ।

ददर्श तत् सरः श्रीमान् विश्वकर्मकृतं यथा ॥ ४२

महाभारत विराट् पर्वणि : महा ४ । अध्यायः ४१ ॥

दैवीं मायां रथे युक्त्वा विहितां विश्वकर्मणा । ३ ॥

महाभारत उद्योग पर्वणि : महा ५ । अध्यायः ९८ ॥

अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा ।

मयेन मनसा सृष्टं पाताल तलमाश्रितं ॥ २

महाभारत भीष्म पर्वणि : महा ६ । अध्यायः ४६ ॥

शासनात् पुरुहूतस्य निर्मिता विश्वकर्मणा । ४२

महा ६ । अध्यायः ६१ ॥

विश्वावसु र्विश्वमूर्ति र्विश्वेशो विष्वक्सेनो विश्वकर्मा वशी च ।

विश्वेश्वरो वासुदेवोऽसि तस्माद्योगात्मानं दैवतं त्वामुपैमि ॥ ४२

महा ६ । अध्यायः ६२ ॥

एतत् परमकं तेज एतत् परमकं सुखं ।

एतत् परमकं सत्यं कीर्तितं विश्वकर्मणा ॥ १७

महाभारत द्रोण पर्वणि : महा ७ । अध्यायः ५८ ॥

विश्वकर्मकृतं दिव्यमुपजह्लर्वरानं ॥ २३ ॥

महाभारत कर्ण पर्वणि : महा ८ । अध्यायः २२ ॥

सर्वाऽयुध महामात्रं विजयं नाम तद्धनुः ।

इन्द्रार्थमभिकामेन निर्मितं विश्वकर्मणा ॥ ३६

महा ८ । अध्यायः २४ ॥

पुर त्रयविसृष्ट्यर्थं मयं वव्रर्महासुरं ।

विश्वकर्माणमजरं दैत्यदानव पूजितं ॥ १३

महा ८ । अध्यायः ॥

तथैव बुद्धया विहितं विश्वकर्मकृतं शुभं ।

ततो विबुधशार्दूलास्तं रथं समकल्पयन् ॥ ६७

महाभारत सौप्ति पर्वणि ꞉ महा १० । अध्यायः १३ ॥

विश्वकर्मकृता दिव्या नाना रत्नविभूषिता ।

उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ॥ ३

महाभारत शान्ति पर्वणि ꞉ महा १२ । अध्यायः ४३ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसंभव ।

विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ५

श्लोकं ५५ अः ४७ ॥ श्लोकं ३ अः ५१ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसंभव ।

अपवर्गोऽसि भूतानां पंचानां परतः स्थितः ॥ ३

महा १२ । अध्यायः ५३ ॥

ततः श्रुतिपुराणज्ञः शिक्षिाता रक्तकण्ठिनः ।

अस्तुवन् विश्वकर्माणं वासुदेवं प्रजापतिं ॥ ३

महाभारत अनुष पर्वणि ꞉ महा १३ । अध्यायः १३५ ॥

विश्वकर्मा मनुस्त्वष्टा ॥ १९

महाभारत अश्वमेध पर्वणि ꞉ महा १४ । अध्यायः ५१ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसंभव ।

यथाहं त्वा विजानामि यथा चाहं भवन्मनाः ॥ ८

महा १४ । अध्यायः ५३ ॥

प्रायश्चित्तेषु मां ब्रह्मश्शान्ति मङ्गलवाचकाः ।

स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तमाः ॥ १०

महा १४ । अध्यायः ५४ ॥

विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमीदृशं ।

पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ ९

## ॥ रामायणं ॥

रामायणः पाल काण्डः रामः १ । सर्गः ७४ ॥

इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।

दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११

रामायणः आयोध्या काण्डः रामः २ । सर्गः ८५ ॥

अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च ।

आतिथ्यस्य क्रियाहेतो र्विश्वकर्माणमाह्वयत् ॥ १०

आह्वये विश्वकर्माणमहं त्वष्टारमेव च ।

आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयतां ॥ ११

रामायणः आरण्य काण्डः रामः ३। सर्गः ११ ॥

इदं दिव्यं महच्चापं हेमवज्रविभूषितं।

वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा॥ २९

रामायणः सुन्दर काण्डः

रामः ५। सर्गः २॥

पालितां राक्षसेनद्रेण निर्मितां विश्वकर्मणा।

प्लवमानामिवाकाशे ददर्श हनुमान् पुरीं॥ १९

रामः ५। सर्गः ७॥

ब्रह्मणेऽथे कृतं दिव्यं दिवि यद् विश्वकर्मणा।

विमानं पुष्पकं नाम सर्वरत्नविभूषितं॥ १०

ज्वलनार्क प्रतीकाशं सुकृतं विश्वकर्मणा।

सेमसोपानसंयुक्तं चारुप्रवरवेदिकं॥ १४

रामः ५। सर्गः १२॥

प्रासादैः सुमहद्भिश्च निर्मितैं विंश्वकर्मणा।

काननैः कृत्रिमैश्चापि सर्वतः समलंकृतां॥ ३५

रामायणः सुन्दर काण्डः

रामः ६। सर्गः १५॥

अयं सौम्यं नलो नाम तनुजो विश्वकर्मणः।

पित्रा दत्तवरः श्रीमान् मतिमो विश्वकर्मणः॥ ८

मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा।

औरसस्तस्य पुत्रोऽह सदृशो विश्वकर्मणा॥ १२

रामः ६। सर्गः २१॥

विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः।

विक्रान्तो वेगवानत्र वसुपुत्रः सुदर्धरः॥ २८

रामः ६। सर्गः १०९॥

तन्मेरुशिखराकारं निर्मितं विश्वकर्मण।

बहुर्भूरिषितं हर्म्यैर्मुक्तारजत संनिभैः॥ २५

रामः ६। सर्गः १११॥

कैलास शिखराकारे त्रिकूटशिखरे स्थितां।

लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा॥ ३

रामायणः सुन्दर काण्डः

रामः ७। सर्गः ३॥

लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा।

राक्षसानां विवासार्थं यथेन्द्रस्यामरावती॥ २४

रामः ७। सर्गः ५॥

अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययं।

ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम॥ १७

विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः।

निवासं कथयामास शक्रस्येवामरावतीं॥ २०

विश्वकर्म वचः श्रुत्वा ततस्ते राम राक्षसाः।

सहस्रानुचरा गत्वा लङ्कां तामवसन् पुरीं॥ २५

रामः ७। सर्गः ॥

विश्वकर्मा तु दृष्ट्वैनं बालसूर्योपमं शिशुं।

शिल्पिनां तु प्रवरः प्राह वरमस्य महामतिः॥ २०

रामः ७। सर्गः ६७॥

इदं चाभरणं सौम्यं निर्मितं विश्वकर्मणा।

दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा।

प्रतिगृह्णीष्व काकुत्स्थ मत् प्रियं कुरु राघव॥ १२